# Document Information

Text title : gaayatrii shaapavimochana
File name : shapavimochana.itx
Location : doc_devii
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Ravisankar S. Mayavaram msr at comco.com
Proofread by : Ravisankar S. Mayavaram msr at comco.com
Latest update : August 23, 2000
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ श्रीगायत्री शाप विमोचनम् ॥

## ॥ श्रीगायत्री शाप विमोचनम् ॥

शाप मुक्ता हि गायत्री चतुर्वर्ग फल प्रदा ।
अशाप मुक्ता गायत्री चतुर्वर्ग फलान्तका ॥

ॐ अस्य श्री गाय्त्री । ब्रह्मशाप विमोचन मन्त्रस्य ।
ब्रह्मा ऋषिः । गायत्री छन्दः ।
भुक्ति मुक्तिप्रदा ब्रह्मशाप विमोचनी गायत्री शक्तिः देवता ।
ब्रह्म शाप विमोचनार्थे जपे विनियोगः ॥

ॐ गायत्री ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः । तां पश्यन्ति धीराः सुमनसां वाचग्रतः । ॐ वेदान्त नाथाय विद्महे हिरण्यगर्भाय धीमही । तन्नो ब्रह्म प्रचोदयात् । ॐ गायत्री त्वं ब्रह्म शापत् विमुक्ता भव ॥

ॐ अस्य श्री  वसिष्ट शाप विमोचन मन्त्रस्य
निग्रह अनुग्रह कर्ता वसिष्ट ऋषि ।
विश्वोद्भव गायत्री छन्दः ।
वसिष्ठ अनुग्रहिता गायत्री शक्तिः देवता ।
वसिष्ठ शाप विमोचनार्थे जपे विनियोगः ॥

ॐ सोहं अर्कमयं ज्योतिरहं शिव आत्म ज्योतिरहं शुक्रः सर्व ज्योतिरसः अस्म्यहं ।
(इति युक्त्व योनि मुद्रां प्रदश्र्य गायत्री त्रयं पदित्व ) ।
ॐ देवी गायत्री त्वं वसिष्ट शापत् विमुक्तो भव ॥

ॐ अस्य श्री  विश्वामित्र शाप विमोचन मन्त्रस्य
नूतन सृष्टि  कर्ता विश्वामित्र ऋषि ।
वाग्देहा गायत्री छन्दः ।
विश्वामित्र अनुग्रहिता गायत्री शक्तिः देवता ।
विश्वामित्र शाप विमोचनार्थे जपे विनियोगः ॥

ॐ गायत्री भजांयग्नि मुखीं  विश्वगर्भां यदुद्भवाः

देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीं इष्टकरीं
प्रपद्ये । यन्मुखान्निसृतो अखिलवेद् गर्भः । शाप युक्ता
तु गायत्री सफला न कदाचन । शापत् उत्तरीत
सा तु मुक्ति भुक्ति फल प्रदा ॥

प्रार्थना ॥

ब्रह्मरूपिणी गायत्री दिव्ये सन्ध्ये सरस्वती । अजरे अमरे चैव
ब्रह्मयोने नमोऽस्तुते । ब्रह्म शापत् विमुक्ता भव । वसिष्ट
शापत् विमुक्ता भव । विश्वामित्र शापत् विमुक्ता भव ॥

Encoded by Ravisankar S. Mayavaram



.. shrI gAyatrI shApa vimochanam ..
was typeset on April 10, 2015

Please send corrections to *sanskrit@cheerful.com*